1442

असंभावनादिनिवर्त्तकमननाद्युपकृताद्वाक्यविचाराच्छक्तितात्पर्यग्राहकानुकूलव्यापारादनुष्ठितादप्रतिबद्धं ज्ञानं जायत एवेत्यर्थः ननु ज्ञानान्मुक्तिरिति कोऽर्थः किं ज्ञानमेव मुक्तिसाध
नं उत ज्ञानमपि नाद्यः विद्यां चाविद्यां चेत्यादिसमुच्चयप्रतिपादकवाक्यविरोधात् न द्वितीयः कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिविरोधादित्याशंक्य नेत्याह न चेति समुच्चय
पक्षमत्र पराकरोति न च वाच्यमित्यत्र हेतुमाह तद्धैतदिति तद्धैतद्ब्रह्म एतत् अहमिति पश्यन् साक्षात्कुर्वन् एतस्मादेव दर्शनादृषिर्नामतो वामदेवः प्रतिपेदे ह किल ज्ञानफलं सर्वभावापत्ति
प्रतिपादकान्मंत्रानूददर्शेत्यर्थः यथा भुंजन्नेव तृप्यतीत्युक्ते भुक्तितृप्त्योर्मध्ये कार्यांतरं न प्रतीयते तथात्र पश्यन्नेव प्रपेदे इत्यत्रापि दर्शनसर्वभावापत्त्योर्मध्ये कार्यांतरप्रतीतिर्वर्त्तमा
नार्थशतृप्रत्ययनिर्देशेन नास्तीत्यर्थः यदा ब्रह्म वेद तदैव ब्रह्म भवतीति ब्रह्मभवनवेदनयोरेककालत्वप्रतीतेः कालविलंबोपि नास्तीत्यर्थः कर्मैव मुक्तिसाधनमिति पराचष्टे तमेवेति न
च स्मृतिविरोधः संसिद्धिशब्देन तत्त्वज्ञानस्यैवोक्तत्वात् कषायेकर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इत्याद्यागमात् कर्मणां तत्त्वज्ञानसाधनीभूतांतःकरणशुद्धिहेतुत्वप्रतीतेः एतेन समुच्चयप्र

न च जातमपि ज्ञानं साधनांतरापेक्षया फलदानाय विलंबत इति वाच्यं तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे ब्रह्म वेद ब्रह्मैव भवति तरति शोकमात्मविदित्यादिश्रुतिभ्य आत्मज्ञान
तत्फलयोः समानकालनिर्देशात् मध्ये साधनांतरकालविलंबयोरभावप्रतिपत्तेः तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेत्यादिसाधनांतरप्रतिषेधश्रवणाच्च तस्मात्स
संन्यासात्मज्ञानमेवामृतत्वसाधनं यत्नतः संपादनीयं तदभावे यतो महती विनष्टिः श्रूयते इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरित्यत्र उत्पन्ने च ब्रह्मात्मज्ञाने विदु
षः फलेन सहाविद्योद्गारः स्मर्यते॥ विद्याविग्रहमग्रहेणपिहितं प्रत्यंचमुच्चैस्तरामुत्कृष्योत्तमपूरुषं सुनिधिया मुंजादिषीकामिव कोशात्कारणकार्यरूपविहतात्पश्यामि निःसंशयं नाशी
हस्ति भविष्यति क्व नु गतः संसारदुःखोदधिः पश्यामि चित्रमिव सर्वमिदं द्वितीयं तिष्ठामि निष्कलचिदेकवपुष्यनंते आत्मानमद्वयमचिंत्यसुखैकरूपं पश्यामि दग्धरशनामिव च प्रपंचं॥

तिपादकवाक्यविरोधोपि परास्तः तत्रैव वाक्यशेषेण व्याख्यामृत्युनिवर्त्तकत्वमेवाविद्याशब्दवाच्यानां कर्मणां प्रतीयत इति ज्ञानमेव मुक्तिफलमिति स्थितं यदा चैवं तदावश्यं संसा
रभीरूणा तन्निवृत्तिसाधनं ज्ञानं श्रवणादिसाधनैः संपादनीयमित्युपसंहारव्याजेनाह तस्मादिति तस्मात्याग एव हि सर्वेषां मुक्तिसाधनमुत्तममिति शास्त्रमाश्रित्याह स संन्यासे
ति यत्नतः संपाद्यत्वे हेतुमाह तदभाव इति इह इति पदं पूर्वार्द्धे स्थितमत्रापि योजयित्वा श्रुतिं पठति इह हि इति इह संसारमंडले ब्रह्मात्मत्वेन न चेद्विदितवंतो वयं ततो हमवेदिः स्यां ब्रह्मा
त्मसाक्षात्काररहितः स्यां अस्तु तर्हि ततः को दोष इति तत्राह महतीति विनष्टिरिति जन्ममरणादिलक्षणानंतपरिमाणा विनष्टिः स्यात्तस्मादवश्यमात्मसाक्षात्कारः संपादनीय एवेत्यर्थः
तत्त्वज्ञाने सति संसारो निवर्त्तत एवेत्यत्र विद्वदनुभवमपि प्रमाणयति उत्पन्ने चेति कारणादिकोशादनात्मराशेर्विविच्य केवलब्रह्मात्मानुभवो मम संवृत्तः संसारश्चासन्निवृत्त इत्य
र्थः तथापि जीवनाभासोप्यनुवर्त्तत इत्याह पश्यामीति न चैतावता मुक्तेः किंचिद्वैकल्यमित्याह तिष्ठामीति ननु संसारदर्शनब्रह्मदर्शनयोर्विरुद्धत्वात्कथमेककालावस्थानमिति त

ईश्वरगीताटी॰ ॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA

अद्वैतदर्शनेनद्वैतप्रपंचोबाध्यतएवेत्यर्थः विरोधशंकांप्रत्याह अद्वैतमपीति अद्वैतानुभवस्यनकदाचिदपिपारोक्ष्यंयथापरित्यक्ताहिनिर्मोकोहिर्भासते एवंसंसारबाध्य मपिसत्वतिभा
सतइत्यर्थः स्वभावपरित्यागापत्तेर्नविपरीताशंकेतिभावः एवंचजीवन्मुक्तिरपिममप्रसिद्धाइत्याह एवंचेति तत्वज्ञानावस्थायांशरीरंबाध्यमितिकिंवक्तव्यंतत्वज्ञानात्स्माकं अ
पिद्वैतप्रपंचप्रतिभासोयोममाभूत्तत्राप्याश्चर्यमेवेदानींममवर्त्ततइत्याह आश्चर्यमिति ननुकिमत्राश्चर्यंश्रोतबोधःपूर्वंबाधकोनाभूतइदानींचतेनबाधितइतितत्राह किमिमा

अद्वैतमप्यनुभवामिकरस्थबिल्वतुल्यंशरीरमहिनिर्ल्वयनीववीक्ष्ये एवंचजीवनमिवप्रतिभासनंचनिःश्रेयसाधिगमनंचममप्रसिद्धं आश्चर्यमद्यममभाति
कथंद्वितीयंनिखेनिरस्तनिखिलेशिवचित्प्रकाशे आसीत्पुरेति किमिमाःश्रुतयोनपूर्वंयेनद्वितीयमभवत्तिमिरप्रसूतं एवंशास्त्राचार्यप्रसादापरोक्षीकृत
तीव्रब्रह्मात्मतत्वस्यगुरुभक्तस्यभिनयोपिस्मर्यते अतोपीयंविद्याजायतएवतथाहि॥त्वत्पादपंकज समाश्रयणेविनामेसन्नप्यसन्निवपरःपुरुषःपुरासीत्
त्वत्पादपद्मयुगलाश्रयणादिदानींनासीन्नचास्तिनभविष्यतिभेदबुद्धिः यस्मात्त्वपापरवशोममदुश्चिकित्संसंसाररोगमपनेतुमसिप्रवृत्तः त्वत्पादपंक
जरजःशिरसादधानस्त्वामाशरीरपतनादहमप्युपासे ननुविद्ययाऽविद्यापमर्देपिकथंसंसारस्येहलोकपरलोकसंचारलक्षणस्यनानाविधयोनिप्राप्तिप
रिहाराभ्यामनेकविधदुःखसंकुलस्यनिवृत्तिःस्यात्तद्धेतोःकामकर्मादेस्तदवस्थत्वात् नचाविद्यानिवृत्त्यातदुपादेयस्यापिसर्वस्यनिवृत्तिरावश्यकी
तिवाच्यं वैशेषिकाणामुपादानेपिक्षणंकार्यावस्थानवदनिवृत्तिशंकायादुरपन्हवत्वात् नचक्षणांतरेनंक्षस्यत्येवेतिनदोषः तत्क्षणवदुत्तरक्षणेप्यनुपप
त्यभावस्यानुमातुंशक्यत्वात् तस्मादज्ञानेनिवृत्तेपिसंसारोननिवर्त्तिष्यते प्रमाणाभावादितिव्यर्थःप्रयासः मैवंकर्ममूलमनर्थानां तत्वज्ञानेनबाध्य
तेक्षीयंतेचास्यकर्माणितथाचश्रुतिशासनंज्ञानेजातेपिकर्ममूलकःसंसारोनुवर्त्तिष्यतइति यदुक्तंतन्न अविद्यावत्कर्मणोपिज्ञानेनबाधितत्वात् अविद्यावत्तत्कार्ये
णापिविद्यायाविरोधित्वाविशेषात् नहिसंभवतिरज्जुसाक्षात्कारेतदविद्यानिवृत्तौतत्कार्यसर्पाद्यनुवर्त्ततइति नचयतोज्ञानमज्ञानस्यैवनिवर्त्तकमित्यवधारणंशास्त्र
((कारणामेवंसत्यसमंजसमितिवाच्यंअज्ञानकार्यस्या

इतिएवमित्याद्युपासेइत्यंतोग्रंथःस्पष्टार्थः ननुज्ञानादज्ञाननिवृत्तावपिसंसारःकथंनिवर्त्ततेतस्यकर्मजन्यत्वात्तस्य((
चविद्यमानत्वादितिशंकतेनन्विति ननुकर्मनोपादानंप्रपंचस्यकिंत्वविद्यासाचज्ञानान्निवृत्तातन्मूलःसंसारोनिवर्त्तिष्यतइत्याशंक्यप्रसिद्धदृष्टांतेनपरिहरति नचेत्यादिनापूर्वंप
समुपसंहरति तस्मादितितत्वज्ञानस्याज्ञानवत्कर्मभिरपिविरोधस्याविशेषाद्धर्माधर्मरूपंकर्मापितेननिवर्त्ततइतिश्रुतिस्मृतियुक्तिसिद्धत्वादितिपरिहरति मैवमित्यादिनास्पष्टार्थोग्रं
थः

विवृ



CC0, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA

उक्तयुक्त्यात्मज्ञानात्कृतकृत्यतासंपन्नेति ग्रंथमुपसंहरति तस्मादिति इतिशब्दो ग्रंथसमाप्तौ एवं ग्रंथस्यावांतरप्रयोजनमाह शृणुप्रकाशेति तादृक्सिंहदंष्ट्रा अधरीकृता य
येत्यर्थः एतेन वादिविजयार्थिभिरपीयमभ्यसनीयेति भावः शेषमतिरोहितार्थं नानादीक्षितसंज्ञेन विदुषेयं विनिर्मिता सिद्धांतमौक्तिकश्रेणीदीपिका स्वप्रकाशिका ॥१॥ वि
दितसकलवेद्यैर्न प्रशंसंति लोके ग्रथितमपि महद्भिः किं पुनर्मादृशेनेति विफलसमेस्मिन् वाङ्मये हं प्रवृत्तः स्वमतिविमलतायै क्षंतुमर्हंति संतः ॥२॥ यदज्ञानादिदं भाति यज्ज्ञा

तदभावे तत्सत्त्वानुपलंभात् न चात्र प्रमाणाभावः भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावर इति श्रुतेः न चैतद्वाक्यं शुभकर्मनि
वृत्तिपरमेवेति वाच्यं कर्मशब्दस्य शुभाशुभसाधारणत्वात् विद्यासामर्थ्यस्य चोभयत्र तुल्यत्वात् ब्रह्मात्मैकत्वविज्ञानं शाब्दं देशिकपूर्वकं बुद्धिपूर्वकृतं पापं कृत्स्नं
दहति वह्निवदित्यत्र बुद्धिपूर्वकृतपापस्यापि ब्रह्मज्ञानेन दाहस्मरणात् यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेर्जुन ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा इत्य
त्र सर्वशब्देनाशेषपुण्यपापगृहीतत्वात्तस्य सर्वस्यैव ज्ञानाग्निना दाहस्य भगवता प्रयुक्तत्वात् किंच यस्य दर्शनमात्रादन्येषामपि पापक्षयो जायते का कथा तस्य ब्रह्मीभू
तस्य पापक्षये तदाह भगवान् वशिष्ठः यस्यानुभवपर्यंतं तत्त्वे बुद्धिः प्रवर्तते तद्दृष्टिगोचराः सर्वे मुच्यंते सर्वपातकैः तथा कुलपावित्र्यहेतुत्वमपि ब्रह्मविदः स्मर्यते कुलं प
वित्रं जननी कृतार्था विश्वंभरा पुण्यवती च तेन अपारसंवित्सुखसागरेस्मिन् लीनं परे ब्रह्मणि यस्य चेतः तस्माद्यथोक्तब्रह्मात्मैकत्वविज्ञानेन कृतकृत्यो भवतीति नात्र
विवदितव्यमिति प्रकाशानंदयतिना कृतिना स्वात्मविशुद्ध्यै सिद्धांतमुक्तावल्येषा रचिता रंध्रवर्जिता अद्वैतानंदसंदोहसत्यज्ञानादिलक्षणा नारायणसमासक्ता श्रियासा
पत्त्यदूषिता शृणु प्रकाश रचितां सद्वैततिमिरापहां वादीभकुंभनिर्भेदसिंहदंष्ट्राधरीकृतां वेदांतसारसर्वस्वमज्ञेयमधुनातनैः अशेषेण मयोक्तं तत्पुरुषोत्तमयत्नतः
स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्तावनिर्यज्ञानां च कृतं सहस्रमखिला देवाश्च संपूजिताः संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योप्यसौ यस्य ब्रह्मवि
चारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥ ॥इति श्रीपरमहंसपरिव्राजकाचार्यश्रीज्ञानानंदपूज्यपादशिष्यश्रीप्रकाशानंदविरचिता सिद्धांतमुक्तावली समाप्ता ॥ ॥

नाम्न प्रलीयते ब्रह्मस्यां तदहं नित्यं नित्यसंवित्सुखाद्वयं ॥३॥ अधिकाश्युपविश्वेशमियं सिद्धांतदीपिका निर्मिता राजतां शश्वत्सदानंदप्रदायिनी ॥ ॥इति श्रीमत्परमहंसपरि
व्राजकाचार्यश्रीप्रकाशानंदपूज्यपादशिष्यश्रीनानादीक्षितविरचिता वेदांतसिद्धांतमुक्तावलीटीका सिद्धांतदीपिका समाप्ता ॥ मिति आश्विन शुक्ल १ प्रतिपदा संवत् १९२९ शुभम्

1444

CCO, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA

१४४५

वे·मु· एवकारोभिन्नक्रमस्तुच्छत्वपदेनसंबध्यतेतेनश्रौतंतुच्छत्वमेवविवर्त्तादिवादस्ययुक्त्यादिमूलत्वात्त इपिविवर्त्ताद्यधिकारिभेदेननविरुध्यतइत्यर्थः उक्तमर्थंवृद्धसंमत्यास्पष्ट टी॰
८० यतितदुक्तमितिवास्तवीपरिणामरूपातस्यावेदांतवादस्यप्रथमसोपानत्वात् एवंप्रपंचस्यतुच्छत्वेश्रुतिमुपपाद्यस्मृतिमपितत्रसंवादयतिवशिष्ठोपीतिअत्रासत्वमित्युप
जीव्यतेयस्माद्वैतंतद्दर्शनंचतुच्छत्वादसत्तस्मादात्मनोऽद्वैतत्वमुपपन्नतरमित्युपसंहरतितस्मादितिद्वैतस्यविवर्त्तत्वेप्युपपन्नमिदानींप्रपंचस्यतुच्छत्वउपपन्नतरमित्यर्थः
अदृष्टरूपमेवात्मतत्वमित्यत्रश्रुतिंप्रमाणयतितथाचेतिश्रुतिरात्मनोद्वैतदर्शनशून्यत्वमेवाहेत्यन्वयः निरोधःप्रलयःवैदिककर्मानुष्ठातासाधकः निःकलंनिरवयवंनिर्विक
ल्पकंविशेषानात्मकंअंजनमविद्यादितच्छब्दलक्ष्यंब्रह्माहमितिसाक्षात्कृत्यब्राह्मणःस्वयंध्रुवमविचालिकूटस्थात्मकोभवतिअनंतअंतोनाशस्तद्रहितंहेतुवर्जितंस्वयम
तदुक्तंगौडैः तुच्छानिर्वचनीयाचवास्तवीचेत्यसौत्रिधाज्ञेयामायात्रिभिर्बोधैःश्रौतयौक्तिकलौकिकैः वशिष्ठोपीममर्थंसाश्चर्यंवदाहअहोनुचित्रंयत्सत्यंब्रह्मत
द्विस्मृतंनृणांयदसत्यमविद्याख्यंतत्पुरःपरिवल्गति तथाअहोनुचित्रंपद्मोत्थैर्बद्धास्तंतुभिरद्रयःअविद्यमानायाऽविद्यातयाविश्वंखिलीकृतं तस्माद्वैततद्दर्शनयोः
स्तुच्छत्वात्स्वतःसिद्धशुद्धबुद्धमुक्तपरिपूर्णानंदात्मनोऽद्वैतत्वमुपपन्नतरं तथाचश्रुतिः ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता
तदेवनिःकलंब्रह्मनिर्विकल्पंनिरंजनंतद्ब्रह्माहमितिज्ञात्वाब्रह्मसंप द्यतेध्रुवंनिर्विकल्पमनंतंचहेतुदृष्टांतवर्जितंअप्रमेयमनादिंचयज्ज्ञात्वामुच्यतेबुधः इत्येवमा
दिकाआत्मनोद्वैतदर्शनशून्यत्वमाहतस्मात्सत्यंज्ञानमनंतंचपूर्णमानंदविग्रहंमांत्रवर्णकमात्मानंविनिश्चित्यविमुच्यतेनचैतादृशमात्मज्ञानंनजायतइतिसांप्रतं
७ साधनचतुष्टयसंपन्नस्यविविदिषोर्मनननिदिध्यासनाभ्यासुपकृतश्रवणानुष्ठानसमनंतरमेवतदुत्पत्तिदर्शनात् अन्यथातादृशात्मप्रतिपादकागमाप्रामाण्यप्रसंगः॥
कार्यदृष्टांतवर्जितंअनुपमंस्वतुल्यरहितंएतेनसजातीयभेदःपरास्तःकारणत्वंप्रतिषेधतिअनादिमितिइतिस्वरूपमात्मत्वेनसाक्षात्कृत्यमुच्यतेअविद्यातत्कार्यरहितोभवतीत्यर्थः
भवत्वेवमात्मतत्वंकिंततस्तत्राहतस्मादितियस्मादिदंवास्तवंवृत्तंतस्मात्सत्यंज्ञानमनंतंब्रह्मेतिमंत्रवर्णसिद्धंसत्यादिस्वरूपमात्मानंस्वमभिन्नंविनिश्चित्यसाक्षात्कृत्यविमुच्यत
इतितज्ज्ञानफलंस्वस्वरूपप्राप्तिरित्यर्थः नन्वेतादृशात्मज्ञानंयदिभवेत्तदाघटादिज्ञानवदुपलभ्येतसाधनाभावान्नज्ञायतइतिचेन्नतत्साधनस्यप्रमाणस्यश्रुतेःसत्वात्ततोनजा
यतएवैतादृशंज्ञानमितिनेत्याहनचेतिनचसांप्रतमितिप्रतिज्ञायांहेतुंवदन्ननुपलंभविरोधंप्रत्याह तदुत्पत्तीतितस्योत्पद्यमानस्यज्ञानस्यपश्यन्प्रतिपेदेयोयोदेवानांप्रत्यबुध्य
तइत्यादिश्रुतिभ्योदर्शनात्नानुपलंभविरोधइत्यर्थः यत्तुसत्यपिसाधनेज्ञानंनजायतइतितदप्ययुक्तमित्याहसाधनेतिवेदानुवचनादिनोत्पन्नविविदिषोर्नित्यानित्यवस्तुविवेका
दिसाधनचतुष्टयेनाथशब्दसूचितेनसंपन्नस्याधिकारिणोगुरूपदिष्टमहावाक्यविचारानंतरंज्ञानोत्पत्तिदर्शनात् कथंतर्हिसंसारानुवृत्तिःश्रुतवेदांतानामितितत्राह मननेति॥ राम
८०

CC0, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA

1446

स्य सत्त्वमस्तीत्यंतः स्पष्टार्थः ग्रंथः नतु जगतोत्यंतासत्त्वं तन्निवर्त्तकं च शास्त्रं इत्येतत्तर्कितं ननु प्रमितमिति चोद्यं परा कुर्वन् शास्त्रस्य सार्थकत्वेन प्रामाण्यमुपसंहरति तस्मादि
ति श्रुतेरर्थांतरशंकानिवर्त्तकं संक्षेपशारीरकवाक्यमुदाहरति नित्यबोधेति बोधपीडितं बोधमहिम्ना तत्रासदित्यर्थः इममेवार्थं स्पष्टयति जगदात्मकस्येति किंच शास्त्रस्यान
र्थक्येनाप्रामाण्यापादनं द्वैतवादिनं प्रति वा अद्वैतवादिनं प्रति वा आद्ये तेषामुपालंभेपि ब्रह्मात्मैक्यवादिनं प्रति तदापादनस्यायोगात् द्वितीये ब्रह्मातिरिक्तं न किंचनापि सदि
ति कुत्राप्रामाण्यमापाद्यतद्गत्याह किंचेत्यादिना अनभ्युपगमादित्यंतेन वेदप्रामाण्यानंगीकारेपाखंडत्वापत्तिमुद्धरति नचेति वस्तुतस्तु पाखंडत्वमात्मातिरिक्तमत्यंतास
द्वेति तदापादनमेवाद्वैतवादिनं प्रति न युज्यत इति ननु वेदस्याप्रामाण्यानंगीकारेपि तत्प्रामाण्यमंगीक्रियते न वा आद्ये द्वैतापत्तिः द्वितीये ब्रह्मात्मैक्यासिद्धिः प्रमाणाभावादि

नित्यबोधपरिपीडितं जगद्विभ्रमं तुदति वाक्यजा मतिः वासुदेव निहतं धनंजयो हंति कैरवकुलं यथा पुनरितिस्मृतिरपि जगदात्मकस्य विभ्रमस्य नि
त्यबोधस्वभावस्यात्मनः स्वरूपं पर्यालोच्यात्यंतासत्त्वमेवाह किंच ब्रह्मातिरिक्तं शास्त्रसत्त्वमस्तीति ये मन्यंते तान्प्रति भवतु शास्त्राप्रामाण्यप्रसंगो दोषः
तस्य प्रमाणैकस्वभावत्वात् ये तु मन्यंते सदाद्वैतमेवास्ति द्वैतवार्त्तानभिज्ञास्तान्प्रति कथमयं दोषः स्यात्तैः शास्त्रस्य वा तत्प्रामाण्यस्य वा ब्रह्मातिरिक्तस्या
नभ्युपगमात् अन्यथा ताभ्यामेवाद्वैतक्षतिः स्यात् न च वेदप्रामाण्यानभ्युपगमे पाखंडत्वप्रसंगः तदप्रामाण्यस्याप्यनभ्युपगमात् न च वेदप्रामाण्यान
भ्युपगमे द्वैतस्याप्रामाणिकत्वप्रसंगो दोषः द्वैतदर्शिनं प्रति प्रमाणाधीनसिद्धिकेचतस्य दोषत्वात् ननु द्वैतदर्शित्वं किमात्मनो धर्मः स्वभावो वा नाद्यः द्वै
तापत्तेः॥८
तिनेत्याह नचेति किमेनच्चोद्यं द्वैतदर्शिनं प्रत्युताद्वैतदर्शिनं प्रति आद्ये किं नश्छिन्नं द्वितीये प्रमाणप्रमेयभावस्यैवासिद्धिः यत्र त्वस्य सर्वमात्मैवाभूदिति
श्रुतेः किंच प्रमाणं किमर्थं मृग्यते प्रतीतये चेत्तन्न स्वप्रकाशत्वेनापि तत्सिद्धेः अज्ञाननिवृत्तये चेत् तथाप्यद्वैतस्य सिद्धत्वेन तत्रानपेक्षणात् न तस्याप्रामाणिकत्वप्रसंग
इत्यर्थः द्वैतदर्शिनं प्रति तस्य दोषत्वादित्युक्तं तदादाय शंकते ननु द्वैतदर्शित्वमिति धर्मपक्षं दूषयति नाद्य इति धर्मः सन्नसन्वा नांत्यः असतो वंध्यापुत्रस्य धर्मत्वादर्शनात्
संश्चेद्द्वैतापत्तिरित्याह द्वैतापत्तेरिति द्वितीये दर्शने द्वैतं विशेषणमेव वाच्यं उपलक्षणत्वे दर्शित्वमेवात्मस्वभावः स्यात्तच्च स्वदर्शित्वेनाप्युपपत्तेर्द्वैतपदं व्यर्थं स्यात् तथा च द्वैतवि
शिष्टदर्शित्वस्य स्वभावत्वे स्वप्रकाशत्वं द्वैतस्यापि स्यादिति दूषयति॥

CC0, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA

1447

नेतरद्रूत्यादिना द्वैतस्यात्मस्वभावत्वे स्वतः सिद्धिः स्यादित्युक्तं तदनुपपन्नं किमात्मस्वरूपमिति कृत्वा स्वप्रकाशत्वमापाद्यते किं वा स्वातंत्र्येण आद्ये दृष्टापत्तिरात्मनः स्वप्रका टी॰
वं॰सु॰ शत्वस्य सिद्धत्वात् द्वितीये निरत्तं च निवर्त्तते इति श्रुत्यात्मभिन्नस्य तुच्छत्वबोधनात् पूर्णप्रतिपादकवाक्यसिद्धपूर्णात्मस्वरूपानुपपत्त्या च द्वैतस्य तुच्छत्वात् स्वतो वा परतो
७९ वासिद्धेर्न द्वैतस्वादितिनेति प्रतिज्ञायां हेतुमाह श्रुतीत्यादिना श्रुतिसिद्धात्मस्वरूपानुरोधेन द्वैतस्य तुच्छत्वमुक्तं तदुपपादयितुं शंकते नन्विति लौकिकाः शास्त्रासंस्कृत
मतयः शास्त्रसंस्कृतमतयः परीक्षकाः ऐकमत्याभावमुपपादयति सर्वशून्यवादिनेत्यादिना तद्विरुद्धस्य शून्यत्वविरुद्धत्वस्य नित्ये सार्वदिकं सत्त्वमनित्ये कादाचित्कं भि

नेतरः द्वैतजातस्य सर्वस्य स्वतःसिद्धिप्रसंगादिति चेन्न श्रुतिदृष्टात्मस्वरूपानुरोधेन द्वैतजातस्य सर्वस्य तुच्छत्वात् नहि तुच्छस्य स्वतःसिद्धिः संभवति तस्य
नेतरः द्वैतजातस्य सर्वस्य स्वतःसिद्धिप्रसंगादिति चेन्न श्रुतिदृष्टात्मस्वरूपानुरोधेन द्वैतजातस्य सर्वस्य तुच्छत्वात् नहि तुच्छस्य स्वतःसिद्धिः संभवति तस्य
निरस्तसमस्तसामर्थ्यस्य स्वतः परतो वा सेद्धुमशक्यत्वात् नन्वात्मभिन्नस्य जगतस्तद्दर्शनस्य च तुच्छत्वं लौकिकानामभिमतं परीक्षकाणां नानाद्यः
तेषामबाधितत्वबुद्धेस्तत्राव्याहतत्वात् तुच्छत्वस्य दूरनिरस्तत्वात् नेतरः परीक्षकाणां सर्वेषामेकमत्याभावात् सर्वशून्यवादिना निःशेषप्रमाणप्रमे
यापलापिनाः प्रामाणिकेनाशेषस्य तुच्छत्वस्वीकारात् तद्विरुद्धस्य नित्यानित्यविभागेन सार्वदिककादाचित्कत्वस्याक्षचरणकणभुगादिभिः स्वीकारात्
तद्विरुद्धस्य च सर्वदा सर्वसत्त्वस्य सांख्यादिभिरभ्युपगमात् तस्मात्परीक्षकाणां सर्वेषां परस्परविप्रतिपत्तेरात्मातिरिक्तस्य तुच्छत्वमसंप्रतिपन्नमेव
तथा च लौकिकपरीक्षकविरुद्धं जगतस्तुच्छत्वं कथमंगीकारपथमारोहति न च परीक्षकाणां मतमपि प्रत्येकं परस्परविरुद्धतया हेयमेवेति वाच्यं ता
वता प्येकैकांगीकारस्य तत्र तत्राव्याहतत्वात् तुच्छत्वे तदभावात् नचात्रापि ममांगीकारोऽस्त्येवेति वाच्यं तवाप्रामाणिकत्वात् तुच्छत्वग्राहकप्रमाणा

तिविभाग इत्यर्थः द्वैविध्यसत्त्वविरुद्धं सांख्यादिमतमित्याह तद्विरुद्धेति विरुद्धत्वमेवाह सर्वदा सर्वसत्त्वस्येति सत्कार्यवादस्वीकारान्न तावत्प्रागसत्त्वं वर्त्तमानकाले स
त्वादेव नासत्त्वं ध्वंसस्य च तिरोधानमात्ररूपत्वात् तस्यामप्यवस्थायां सत्त्वात् सर्वदा सत्त्वमिति सांख्यमतं तथा पातंजलादीनां संग्रहाय आदिपदं तुच्छत्वासंप्रतिपत्तेः फलमाह त
थाचेति तत्र तत्रेति शून्ये तथा सर्वदा सत्त्वकादाचित्कसत्त्वपक्षादौ तदभावादिति एकैकांगीकारस्याप्यभावादित्यर्थः तुच्छेऽपि परीक्षकांगीकाराभावोऽसिद्धः ममपरीक्षक राम॰
स्य तत्रांगीकारसत्त्वादितिनेत्याह नचात्रापीति परीक्षकत्वासंमत्यापरिहारे हेतुमाह तवेति प्रमाणे न परीक्ष्य व्यवहर्त्ता परीक्षकः नच तुच्छे प्रमाणमस्ति तत्सत्त्वे तुच्छत्वक्षतेरिति ७९

CCO, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA

1448

ननुवस्तुनोद्वैरूप्यासंभवात् नसर्वेपक्षाःप्रामाणिकाएवतथासतिपरस्परविगानात्कोवापरीक्षकःकिंमतंचोपादेयंकिंवाहेयमितिनियामकाभावादेकस्याप्यनुपादानमि
तिनेत्याह नचेति परीक्षकत्वेपक्षस्यचोपादेयत्वेविनिगमकंशंकते नित्येतिस्ववाक्यंविवृणोति यस्यहीतित्याज्यत्वेसिद्धांत्यभिमतत्वदृष्टांतमाह यथैतितुच्छत्ववादाहहते
तर्हीति नन्वप्रामाणिकत्वमसिद्धंप्रत्यक्षादिप्रमाणमूलत्वादितरपक्षस्येत्याशंक्यहेत्वंतरमाह श्रुतिविरुद्धत्वादिति तथाचप्रत्यक्षादिश्रुतिविरोधेआभासीभवतीत्य
र्थः ननुनश्रुतिःप्रपंचस्यसाक्षात्तुच्छत्वपरास्तिसमन्वयाधिकरणविरोधात्तत्राह श्रुतिस्त्विति श्रुतिरात्मातिरिक्तस्यसर्वस्यतुच्छत्वमभिमन्यतइत्यतइत्यन्वयः श्रुती
रुदाहरति सदेवेत्यादिना मीयंतइतिमात्राः मात्राभ्योन्योमात्रः अप्रमेयइतियावत् अथवामात्राएकदेशोवयवास्तद्रहितः तेनस्वगतभेदनिषेधसिद्धिः तुर्यएवचतु

नचपरीक्षकाणामपिपरस्परविरुद्धानांमध्येकस्यमतंसमीचीनंकस्यासमीचीनमितिविनिगमकाभावात् एकमपिनग्राह्यमितिवाच्यंनित्यनिर्दुष्ट
वेदमूलकत्वभावाभावाभ्यांविशेषात् यस्यहिमतंवेदमूलंतद्ग्राह्यंयस्यतुतन्नास्तितत्त्याज्यंयथापाखंडानांमतंद्वंततद्वैततोपिगत्वाश्रुत्यैवविश्वा
सप्रश्वेत् श्रुतिसिद्धमेवमतमदुष्टंग्राह्यमितितदितरद्याह्यमेवाप्रामाणिकत्वात् श्रुतिविरुद्धत्वाच्च श्रुतिस्तुसदेवसोम्येदमग्रआसीत् एकमेवाद्विती
यं सएषनेतिनेतीति अथतस्यायमादेशः अमात्रश्चतुर्थोव्यवहार्यःप्रपंचोपशमःशिवोद्वैतइत्येवंप्रकारिकासजातीयविजातीयस्वगतभेदशून्यमा
त्मानंबोधयंती आत्मातिरिक्तस्यसर्वस्यतुच्छत्वमभिमन्यते तदतिरिक्तस्यकथंचिदपिसत्वेद्वैतव्याघातप्रसंगात् तस्माज्जगतस्तुच्छत्वंश्रुत्यनुमतमेव

र्थशब्दार्थःअव्यवहार्यःअभिवदनादिव्यापाराविषयइत्यर्थः तस्यपुरुषार्थत्वमाह प्रपंचेति प्रपंचाभावरूपत्वंतदोपपद्यते यदिप्रपंचोसद्रूपोभवेत् असद्भावस्यभावरूप
त्वात् तेनविजातीयभेदनिराकृतिः तस्यसुखरूपतामाह शिवइति सजातीयभेदंनिषेधति अद्वैतइति तेनश्रुतार्थापत्तिःप्रपंचस्यत्रैकालिकाभावंबोधयतीत्यर्थः नचैवं
प्रपंचस्यप्रामाणिकत्वं आभासोपस्थितस्याप्यभावप्रतियोगित्वोपपत्तेः अन्यथानसुरांपिबेदित्यादौसुरापानस्यापिप्रामाणित्वंकिंनस्यात् अभिमन्यतइतिवदतासमन्वय
विरोधोपिनिरस्तः अन्यथाविवक्षितात्मसिद्धिरेवनस्यादित्यात्मसिद्ध्यर्थमेवप्रपंचतुच्छत्वानुमानमितिनकोपिविरोधगंधइति ननुकिमितितुच्छत्वमेवावेदयति उक्तात्मस्व
रूपस्यप्रपंचमिथ्यात्वेनापिसिद्ध्युपपत्तेरितिनेत्याह तदतिरिक्तस्येति कथंचिदपिमिथ्यात्वेनवास्तवत्वेनवेत्यर्थः कथंतर्हिविवर्तवादादिस्वीकारइत्याशंकांपरिहरन्नुप

संहतितक्षादि॰॥

CCO, Gurukul Kangri Collection, Haridwar, Digitized by S3 Foundation, USA